॥ श्रीः ॥

# भूमिका

इह खलु सर्वविज्ञानरत्नोद्भासुरं संस्कृतवाङ्मयवारिनिधिमवगाढुमिच्छतां सहृदयानां काव्यसुधाभिषेकस्तावदनिवार्य इति न कस्यापि विवादास्पदमक्षरजुषः। काव्यान्येव हि गीर्वाणगिरः सम्यक्परिचयमादधति व्युत्पादयन्ति व्युत्पित्सून्, एतान्येव परिशीलितानि समुन्मीलयन्ति चक्षुर्भाषापद्धताविव पुरातनाचारविचारपद्धतिष्वपि। एतैरेव वयं पूर्वजानां लोकातिशायीनि महत्त्वानि सम्यगवबोध्यामहे, तत्पादचिह्नानि चानुगन्तुमुत्साह्यामहे। एतेभ्य एव भारतीयानां कवितल्लजानामलौकिकचरित्रचित्रणचातुरी सम्यगद्यापि समुन्मिषन्ती विस्मापयते वैदेशिकानामपि मनांसि। एतान्येव च वचसामगोचरं किमपि सौहित्यं मनस उद्भावयन्ति आकर्षन्तीव संस्कृतवाङ्मयद्वारे तदभिमुखान् लोकान्। बहूनि किलानन्यसाधारणानि काव्यप्रयोजनानि समुपपादितान्यालङ्कारिकैः, न तान्यत्र विवरीतुमिच्छामः। तत एव च जागर्ति जनपदेषु निखिलेष्वपि चिरायैव महाकाव्यानामध्ययनाध्यापनशैली।

परं कालभेदः पाठनशैलीमपि स्वप्रभावेण परिवर्तयितुं विवशीकरोति। न ह्यद्यत्वे छात्राणां तादृशी मेधा, न तादृशमेकाग्रत्वम्, न वा तावान् समयोऽध्ययनाय तैर्लभ्यते। 'गुरोर्गिरः पञ्च दिनान्यधीत्य' इत्याभाणकस्य निदर्शनीभवन्तश्छात्रा इदानीं द्रुतमेव सर्वमध्ययनं समाप्य गृहाश्रमं निर्वोढुं द्रविणं च समार्जयितुं कृतत्वरा दृश्यन्ते। तत एव च ते न भवन्ति कस्यापि शास्त्रस्यावारपारीणाः, ततस्ततस्तत्तत् किञ्चिदाघ्रातुमनसो ग्रन्थचुम्बका एव प्रायेणावलोक्यन्ते। सैव दशा काव्यानामप्यध्ययने। न ह्यादितोऽवसानपर्यन्तं किमपि काव्यमद्यत्वे प्रायेण केनाप्य-

धीयते, अपि तु कुतश्चिदेकः, कुतश्चिच्च द्वावित्येवं केचित्सर्गाश्छात्रैः कथंचिदाम्नायन्ते, तथैव च ते तासु तासु परीक्षासु नियम्यन्ते प्रबन्धकर्तृभिः। क्वचिच्चैकतमस्यैव कस्यचित्काव्यस्य कतिचित्सर्गाः परीक्षायां नियता दृश्यन्ते। द्वित्रसर्गनियमने प्रायेणारम्भगता एव सर्गाः परीक्षितुं गृह्यन्ते पुस्तकसौलभ्याय, तेन च महाकवीनां यत्र कवितायाः परिपाकः, यानि च स्थलानि चरित्रचित्रण आदर्शभूतानि तेषां ज्ञानेन वञ्चिता एव भवन्ति च्छात्राः। एकतमस्यैव काव्यस्य नियमने तु तदितरेषां महाकवीनां लेखन्याः परिचय एव न जायत इति महान् दोष आपतति। शृङ्गारबहुलानि तादृशान्यपि च स्थलानि तत्र तत्र परीक्षणीये भाग आपतन्ति, येषामध्ययनं कुमाराणां नोपयोगि, न चोचितम्, विशेषतस्तु कुमारीणाम्। कस्यचित्कठिनस्यैकतमस्य काव्यस्य क्वचिन्नियतौ जातायां च पूर्वं सरलकाव्यक्रमेणाध्ययनाभावान्न व्युत्पद्यन्ते तत्र च्छात्राः। यथात्र पञ्चनदप्रान्ते प्रथमायां प्राज्ञपरीक्षायां रामायणस्य पुराणानां वा केचिद् भागाः, पञ्चतन्त्रं चेत्येतावान् काव्यपरिचयः, तदनु विशारदपरीक्षायाम् ( मध्यमायाम् ) तु एकवारमेव माघकृतेः ( शिशुपालवधमहाकाव्यस्य ) नव सर्गा नियतीकृता इति कथं प्रथमत एव च्छात्राणामेतादृशे कठिने काव्ये व्युत्पत्तिरुदियात्? न चैषां कालिदासादिमहाकवीनां काव्यानि श्रवणपथमपि क्वचिदुपयान्ति। माघस्य सप्तमादिषु सर्गेषु वनविहार-जलविहार-दूतीप्रेषणादिवर्णनानामध्ययनं च कुमाराणाम् कुमारीणां च कियदुचितमिति न विशेषेण विवरीतुमावश्यकमाधुनिकशिक्षापद्धत्यभिज्ञानां पुरः। टीका अपि चैषु महाकाव्येषूपलभ्यमाना नाल्पबोधानां छात्राणां व्याकरणालंकारादिषु व्युत्पादने साहाय्यमुपयान्ति, न च गुरुपरम्पराध्ययनपद्धतिरिदानीं सुरक्षिता वर्तते, विशेषतोऽस्मिन् पञ्चनदप्रान्ते। ततश्चाधीत्यापि काव्यम्, परिश्रम्यापि तत्र महान्तं कालं नालोक्यते प्रायेण भाषाव्युत्पत्तिश्छात्रेषु, दूरे त्वलङ्कारव्युत्पत्तेः कथा। तदेतत्सर्वं सखेदमालोचमालोचमह्मस्य सटीकस्य महाकाव्यसंग्रहस्य संपादने प्रावर्तिषि।

विशारदपरीक्षायां तत्सदृश्यामन्यस्यां वा मध्यमपरीक्षायामधीया-

नाना छात्राणां हितायैव प्रयत्न एष आरब्ध इति महाकाव्येषु ये सर्गा मद्बुद्ध्या तेषामत्यन्तमुपयोगिनो ज्ञाताः, त एवात्र संगृहीताः । प्रसिद्धानि हि पञ्च महाकाव्यानि, तत्र नैषधमतिकठिनमुत्तमशिक्षायां अधीनयोग्यमिति न मध्यमशिक्षायां प्रवेशयितुमुचितम् । उत्तमायां पञ्जनदप्रान्तस्य शास्त्रिपरीक्षायां नियतश्च तस्य भाग इति न तदत्र संगृहीतम् । अन्येभ्यस्तु रघुवंश-कुमारसम्भव-किरातार्जुनीय-शिशुपालवधाभिधेभ्यो महाकाव्येभ्यस्ते ते सर्गाः संगृह्य छात्रोपकारिण्यन्वनुगतार्थाभिधया टीकया संयोजिताः । अस्यापि च संग्रहस्य छात्रसौकर्याय भागद्वयं कल्पितम् . तत्र प्रथमेऽस्मिन् भागे रघुवंशस्य महाकाव्यस्य द्वितीय-त्रयोदशौ सर्गौ, कुमारसम्भवस्य च प्रथमपञ्चमाविति कविकुलगुरोः कालिदासस्यैव सर्गचतुष्टयं संगृहीतम् । भागान्तरे च किरातार्जुनीयशिशुपालवधाभ्यां सर्गपञ्चकसंग्रहः मिलितं नवसर्गात्मकं भागद्वयमिदं केवलं संस्कृतमधीयानानां मध्यमशिक्षायोग्यं मन्मतौ सम्यक् प्रतीयते । भागद्वयमेतच्चेह विशारदपरीक्षायां नियतीकृतं विश्वविद्यालयाध्यक्षैः । आङ्ग्लभाषया सह द्वितीयभाषारूपेण संस्कृतमधीयानानामपि छात्राणां मध्यमाशिक्षायामनेन प्रथमेन भागेन हितं सम्पादयितुं शक्यते-इति मद्बुद्धिः । अत्र राजर्षेर्दिलीपस्यालौकिक्या गोसेवाप्रवणतायाः, प्रभावस्य, अनन्यसाधारणस्यात्मत्यागस्य च वर्णनेन समलंकृतो रघुवंशस्य द्वितीयः सर्गः कुमाराणां मनस्सु कमपि पूर्वजानामादर्शं निधातुमलम्, त्रयोदशश्च प्राकृतपदार्थवर्णने किमपि वैलक्षण्यमावहतीति संग्रहेऽत्र संनिवेशितः । कुमारसम्भवस्य च प्रथमः सर्गः प्रकृतिवर्णनाय, भगवत्याः पार्वत्या अलौकिकसौन्दर्यवर्णने कविप्रौढेः परिचयाय, काव्यकथामुखबन्धज्ञानाय चावश्यकः, पञ्चमस्तु भगवत्या विचित्रतपोवर्णनेन कपटवटुसंलापनिबन्धनेन चास्मद्बुद्धौ कविकुलगुरुप्रौढेरादर्शभूत इति सोऽत्र सादरं संनिवेशितः । मध्यमशिक्षोपयोगी संग्रहोऽयमिति न सहृदयैर्विस्मर्तव्यम्, रघुवंशस्याष्टमचतुर्दशौ, कुमारसम्भवस्य चतुर्थश्चेति सर्गा इमे यद्यपि रसपरिपोष आदर्शभूताः, तथापि तद्घटना कुमारेषु नोचितं प्रभावमुत्पादयेदिति न तेऽत्र

संगृहीताः । सर्वैव तु कालिदासकविताऽध्ययनस्य मननस्य सुचिरं भाव-नायाश्च योग्येति कस्योत्कर्षापकर्षावुच्येताम्, तथापि कियांश्चिदंशः संग्राह्य इति स्वबुद्ध्या संगृहीत एव ।

अस्य चांशस्य निबद्धा छात्रोपकारिणी व्याख्या । अस्यां व्याख्यायां श्रीमन्मल्लिनाथसूरिविरचिता सञ्जीवनी व्याख्या मुख्यतयाधारभूता, सुप्र-सिद्धत्वान्मल्लिनाथनिबद्ध एव पाठोऽत्र समादृतः, तद्व्याख्यात एव चान्वयः शब्दार्थौ भावार्थश्च प्रायेणोपजीवितः, यत्र त्वस्माकं क्वचिद्विमतिस्तत्र तन्म-तानुवादपुरःसरं सा प्रकटिता, विमतिहेतुरपि च प्रायेण तत्र तत्र निर्दिष्टः । इदन्तु वक्तुं विवशाः स्मो यन्मल्लिनाथमहाभागेन कालिदासकाव्यानि व्याचक्षाणेन भावार्थ-व्यङ्ग्यार्थालङ्कारादिप्रदर्शने विलक्षणमेवौदासीन्यमाल-म्बितम्, विशेषतस्तु रघुवंशे । तत्र हि केवलं शब्दार्थमात्रं तस्य टीका, कोशग्रन्थनमेव च तत्र प्रधानम्, न तु व्युत्पित्सूनां व्युत्पत्तये, सहृदयानां मनस्तोषाय वा समुचितावश्यकवस्तुविन्यासोऽपि तत्र दृश्यते । न च रघुवंशस्य काचिदन्यापि प्राञ्ची व्याख्यास्माभिरुपलब्धा, यत्रैवंविधविषयविन्यासो भवेत्, ततश्चाल्पयापि स्वबुद्ध्यैव सर्वमिदमस्माभिरेव निबन्धुमापतितम् । वाराणसीवास्तव्यप्रियसुहृच्छ्रीगौरीनाथपाठकेन निबद्धा (१६२० खिस्तवत्सरे मुद्रिता ) आधुनिकी रघुवंशद्वितीयसर्गस्य सुबोधिन्याख्या व्याख्या-प्यस्माभिर्दृष्टा, बहुत्र कोशांशास्ततोऽप्युद्धृता इति तस्यापि महाशयस्य कृतज्ञतामावहामः ।

अथ कुमारसम्भवस्य तु पुरातनमन्यदपि टीकाद्वितयमस्माभिः साव-धानमालोचितम् । एतद्धि सुप्रसिद्धेन विलुप्तानां बहूनां संस्कृतपुस्तकरत्ना-नामाविष्कर्त्रा माननीयेनास्मत्प्रियसुहृदा श्रीमता महामहोपाध्यायेन त, गणपतिशास्त्रिमहोदयेन सम्पाद्य 'अनन्तशयनसंस्कृतग्रन्थावलौ' (त्रिवे-न्द्रम् ) प्रकाशितम्, तदनुग्रहेणैवास्माभिरुपलब्धम् । अत्रैका श्रीमदरुण-गिरिनाथ ( अरुणाचलनाथ ) विरचिता कुमारसम्भवप्रकाशिकाख्या व्या-ख्या, ( प्रकाशिकापदेनैवेयमस्माभिर्व्यवहृता ), इयं मल्लिनाथात्प्राचीना 'नाथस्तु,' इति सङ्केतेनैतन्मतं मल्लिनाथेन क्वचित्क्वचित्प्रकटितम् । इय

मतिसंक्षिप्ता टिप्पणीरूपैव, परं स्वल्पैरेवाक्षरैरर्थगौरवमत्रातिनिगूढं द्योतितं पण्डितेन व्याख्यात्रा। श्रीमता नारायणपण्डितेन विरचिता 'कुमारसंभवविवरणम्' इति नाम्ना प्रसिद्धा द्वितीया व्याख्या। (इयं विवरणनाम्नैवास्माभिर्व्यवहृता)। इयमतिविस्तृता प्रकाशिकाया भाष्यरूपा, प्रकाशिकायां संक्षेपेण निर्दिष्टा एवार्था अत्र विस्तार्य प्रदर्शिताः सन्ति। अन्वयः, व्याख्या, भावार्थः, व्याकरणांशः, व्यङ्ग्यार्थोऽलङ्कारादिश्चेति सर्वमत्र वैशद्येन विवेचितम्। अतिविस्तृतत्वात्साकल्येनैतदर्था नास्माभिः संगृहीताः, परमावश्यका अंशा न त्यक्ताः। एतत्प्रदर्शिता व्यङ्ग्यार्था ये व्युत्पत्त्यर्थमावश्यकाः, ते क्वचिद्भावार्थे क्वचिच्चालङ्कारादिषु संगृहीताः। यत्र च व्याख्याने व्यङ्ग्यादावलङ्कारादिषु वा क्वचिदस्माकं विमतिः, तत्र सहेतुकं प्रायेण सा निर्दिष्टा। एतदभिमताश्च पाठभेदाः प्रायेण टिप्पण्यां सन्निवेशिताः। क्वचिच्च मल्लिनाथपाठापेक्षया सुन्दरत्वेन प्रतीतः पाठो मूल एव निवेशितः, मल्लिनाथानुमतस्तु पाठभेदस्तत्र टिप्पण्यामुद्धृतः। एतट्टीकाद्वयं सहृदयानां मनस्तोषाय सर्वात्मनालमिति वयमभिप्रेमः। अरुणगिरिनाथेन व्याख्याकृतो दक्षिणावर्तस्य नाम तत्र तत्र स्मृतम्। परं न सा व्याख्याद्यावधि समुपलभ्यते, सैव तु मल्लिनाथमहाभागस्योपजीव्येति प्रतिभाति। अरुणगिरिनाथेन दक्षिणावर्तनाम्नानूदितानां पाठानामर्थानां च सञ्जीविन्यां दर्शनात्। हन्त! एतादृशीं सर्वाङ्गरमणीयां व्याख्यां दृष्ट्वापि तत्रभवतः कोलाचलमल्लिनाथसूरेः—

भारती कालिदासस्य दुर्व्याख्याविषमूर्च्छिता।
एषा सञ्जीवनी व्याख्या तामद्योज्जीवयिष्यति॥

इतीयं वाक् कथं प्रसृतेति पर एष विस्मयोऽस्मन्मनसि। तेन च महोदयेन सर्वांश्चमत्कृतिसारानर्थानपह्नुवानेन कोऽयं कालिदासभारत्या उज्जीवनप्रकार आश्रित इति किं ब्रूमहे। मौनमेवात्र श्रेयः। अस्माभिस्तु सर्वे एवैते स्वव्याख्याया उपजीव्यत्वेनाश्रिता इति सर्वेषामेव सुतरां कृतज्ञाः स्मः।

अथास्यां छात्रोपकारिण्यां व्याख्यायां यया रीत्या काव्यानि पाठि-

तारछात्राः सम्यग् व्युत्पद्यन्ते, स एव क्रम आश्रितः । अनेनैव क्रमेण च्छात्रान् सम्यगध्याप्य गीर्वाणभारत्यां व्युत्पादयन्तु-इति सविनयमध्यापकमहोदयान् प्रार्थयामहे । तत्परिचयाय च कांश्चिदस्याष्टीकायाः सङ्केतान् स्पष्टीकुर्मः । अत्र प्रथमं दण्डान्वयसंनिवेशः, (यद्यप्यन्वयादपि पूर्वं पदच्छेदोऽध्यापकैः शिक्षणीयः, तथापि न तस्य व्याख्यायामुपन्यसनमावश्यकम्, अन्वयेनैव पदविभागज्ञानसिद्धेरिति विस्तरभिया स उपेक्षितः, शिक्षकैस्तु शिक्षणीय एव ) । अध्याहारलभ्यान्यपि पदानि प्रायेणान्वयबोधके वाक्ये पूरितानि, क्वचिदनवधानेन त्यक्तान्यपि शिक्षकमहाभागैः पूरणीयानि । चकारादीनां निपातानां सन्निवेशस्तदन्वयिन आदावन्ते वा क्रियत इत्युभयविधोऽपि व्याख्याकर्तां सम्प्रदायः । तथैवात्रापि व्याख्यायां निपातसंनिवेशे क्वचित्क्वचिद्भेद इव जातः, ( क्वचिदादौ क्वचिदन्ते च संनिवेशो जातः ) सोऽयं यत्रानवधाननिबन्धनो भवेत्तत्र शिक्षकैः शोधनीय एव । निपातानां वाक्यादौ प्रयोगो यद्यपि व्युत्पत्तिविरुद्धः, अथाप्यन्वयबोधकं वाक्यं न स्वतन्त्रवाक्यमिति तत्र तथा प्रयोगो न दोषाय मतः, तत एवात्र क्वचित्सत्यावश्यकत्वे निपातानां वाक्यादावपि प्रयोगः, क्वचिच्च वाक्यनियमरक्षणाय किमादिशब्दा आदौ संनिवेशिता इति तत्र तत्रालोच्यं विद्वद्भिः । युष्मदस्मदोः-वां-नौ-ते-मयाद्यादेशाश्चापि वाक्यादौ यद्यपि व्याकरणविरुद्धाः, तथापि श्लोकवाक्ये पदात्परत्वेन यत्र कविना ते निबद्धाः, तत्रान्वयवाक्ये सत्यामावश्यकतायां युष्मदादीनां वाक्यादौ प्रयोगेऽपि त आदेशा अनुकरणीया एव भवन्ति, श्लोकपदानामन्वये परिवर्तनस्य संप्रदायादर्शनात् । अनुकृतिरूपमेव च तद्वाक्यमिति न स्वतन्त्रवाक्येष्विव व्याकरणविरोधोऽत्र । एवमन्यदप्येवंविधं तत्र तत्रानुसंधेयम् । उपमावाचकस्येवशब्दस्यान्वयो यद्यपि मुख्येनोपमानेन सहैवोचितः, तथापि व्याख्यासौकर्याय क्वचिद् व्याख्याकृद्भिरुपमाप्रयोजकबिम्बप्रतिबिम्बभावापन्नार्थबोधकैः पदैः सहायं संनिवेशितः, यथा ' श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ' इति वाक्ये स्मृतिर्मुख्यमुपमानम् , अर्थस्तु मार्गेण सह बिम्बप्रतिबिम्बभावापन्नः, परं मल्लिनाथेन ' स्मृतिः श्रुतेरर्थमिव ' इति

र्थशब्देन सहेवशब्दः संनिवेशितः । 'स्मृतिरिव श्रुतेरर्थम्' इत्युक्तथा श्रुत्यर्थादिशब्दार्थानां सादृश्ये प्रवेश एव नास्तीति भ्रान्तिरालोचकानां संभवेद् इति वर्तते व्याख्यायामसौकर्यम्, तेन क्वचिदस्माभिरपि पूर्वव्याख्याशैलीमनुसृत्यैवेवशब्दः प्रयुक्तः । क्वचित्त्वग्रे 'अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः' ( संग्रहस्य प्रथमसर्गान्तिमपद्ये ) इत्यादौ मुख्यस्थान एव इवशब्दं संनिवेश्य मल्लिनाथादिभ्यो विभिन्नयापि शैल्या व्याख्यातम् । तस्यैतस्यौचित्यानौचित्ये मार्मिकैर्विद्वद्भिर्विवेचनीये ।

अथान्वयादनन्तरं तत्तत्पदानां विग्रहाः, प्रकृतिप्रत्ययाद्यंशाः ( पाणिनिसूत्रपुरःसराः ) परस्परं क्रियाकारकभावाद्याः संबन्धाश्च शिक्षणीया इति व्याकरणं व्याख्यायामस्यां निवेशितम् । क्वचित्पूर्वमेवान्वयाद् व्याकरणं शिष्यते-इत्यप्यस्ति संप्रदायः, परं व्याख्यायामन्वयादुत्तरमेव तत्संनिवेश औचित्यं प्रतीतमिति तथैव कृतम् । इह प्रथमे पद्ये सर्वेषामेव पदानां परस्परं संबन्ध उपन्यस्तः, सर्वत्र तु तथाकरणे महान् विस्तरः स्यादिति येषां संबन्धस्य बोधनमावश्यकम्, तेषां बोधितः, सुगमस्तूपेक्षितः । शिक्षकमहाशयैस्तु व्युत्पत्तये सर्वेषां पदानां परस्परं क्रियाकारकभावादिसंबंध आदौ शिक्षणीय एव ।

विस्तरपरिहारायैव समस्तपदानां विग्रहेष्वपि संक्षेप आश्रितः, पृथक् पृथगेकैकं समासा विगृह्य शिक्षणीयाः, पूर्वं प्रथमान्तेन समासं प्रदर्श्य तदनु च परिनिष्ठिता विभक्तिर्बोध्येत्यस्ति संप्रदायः । अस्माभिस्तु एकस्मिन् समस्ते पदे यावन्तः समासास्ते प्रायेण युगपदेव विगृह्य दर्शिताः, परिनिष्ठितविभक्त्यैव च समास आश्रितः । यत्र यत्र समासभेदस्तत्र तत्र प्रायेण कोष्ठेषु तत्तत्समासनामानि सङ्केताक्षरैर्निर्दिष्टानि । संकेताक्षराणि च तत्तत्समासाद्याक्षराण्येव । यथा—

( तत्पु० )=तत्पुरुषः ।

( ष० तत्पुरुष० )=षष्ठीतत्पुरुषः ।

( कर्म० )=कर्मधारयः ।

( उप० स० )=उपमितसमासः, उपपदसमासो वा ।

( बहु० )=बहुव्रीहिः ।
( द्व० )=द्वन्द्वः । इत्यादि ।

यथा 'खुरन्यासपवित्रपांसुम्' इत्यत्र 'खुराणां न्यासैः ( ष० त० ) पवित्राः ( तत्पु० । पांसवो यस्मिन् ( बहु० ) तम्,' इत्येतावन्मात्रमत्र व्याख्यायां निर्दिष्टम् । संप्रदाये तु 'खुराणां न्यासाः खुरन्यासाः, खुरन्यासैः पवित्राः-खुरन्यासपवित्राः, खुरन्यासपवित्राः पांसवो यस्मिन्, स खुरन्यासपवित्रपांसुः, तं खुरन्यासपवित्रपांसुम्' इत्येवं शिक्ष्यते । तत्र संक्षेपार्थमेवायं क्रमोऽस्माभिराश्रितः, शिक्षकमहाभागैर्यथासंप्रदायमेव शिक्षणीयाश्छात्राः । व्याख्यायां मध्ये समासनामनिर्देशेन विच्छिद्य विग्रहशिक्षणं छात्राणां न दुर्बोधं भविष्यति । अग्रे तु क्वचिन्नामनिर्देशोऽपि न कृतः, व्युत्पन्नाश्छात्राः सुगमं तत्परिचेष्यन्तीति । एवमेव क्वचिद्विग्रहमात्रं निर्दिष्टम्, सिद्धरूपन्तु अन्वये दर्शनेन सुग्रहं भविष्यतीति तदुपन्यास-उपेक्षितः, तदिदमप्यध्यापकैः सम्यक् शिक्षणीयम् । प्रत्ययविधायकादि-सूत्राणि च बहुत्र पूर्णानि लिखितानि, महान्ति तु सूत्राणि आदौ प्रतीकं दत्त्वा क्वचित् '.........' चिह्नेन क्वचिच्चेतिशब्देन निर्दिष्टानि, तान्यध्यापकैरेव बोधनीयानि । येषु च सूत्रेषु प्रत्ययग्रहणं स्पष्टमन्त उपलभ्यते, तत्र सूत्रमेवोपन्यस्य वाक्यविरामः कृतः, 'अनेन सूत्रेणायं प्रत्ययः' इति पृथङ् न निर्दिष्टम् । तदिदं सर्वं विस्तरभियैवेत्यनुसंधेयम् । तथापि तु व्याकरणे छात्राणां व्युत्पादनाय महानत्र व्याख्याविस्तरः कृतः । यानि तु पदानि पूर्वं कतिधा व्याख्यातानि, तानि अग्रे उपेक्षितानि, अध्यापकमहोदयैः स्थाने स्थाने स्मारणीयान्येव ।

अथ व्याकरणोपन्यासोत्तरं व्याख्यायां पर्यायैः शब्दार्थो निरूपितः इयं व्याख्या प्रायेण मल्लिनाथानुसारिण्येव, तथापि स्पष्टीकरणाय क्वचिद् त्रिधापि चार्थोऽनूदितः । तत्र तु शब्दस्य मुख्योऽर्थः पर्यायरूपेण प्रथमं निर्दिष्टव्यः, प्राकरणिको निष्कृष्टोर्थस्तु 'इति यावद्' इति रीत्या इत्यपि परिपाटी । तथैवादावस्माभिरपि निर्दिष्टम्, अग्रे तु 'इति यावद् निर्देश उपेक्षित एव । कोशांशाश्च पृथक्कृत्य टिप्पण्यां निवेशिताः

यत्र काव्ये सरला व्यवहारप्रसिद्धा एव शब्दाः सन्ति, तत्र तु तेषां व्याख्यारूपेण कठिनपर्यायनिवेश उपहासास्पदमिति प्रायेण न तथा कृतम्। पर्यायज्ञानाय कोशस्तत्रापि बहुधा टिप्पण्यां दत्तः।

व्याख्याया अनन्तरं च भावार्थः सुस्पष्टं निर्दिष्टः। अस्मिन् हि परीक्षायुगे केवलं पर्यायघोषणं कृत्वा छात्राः परीक्षासूत्तीर्णा भवन्ति, पद्यानामभिप्रायांस्तु नैव तेऽवगच्छन्ति, तेन न व्युत्पत्तिः, न च काव्यरसास्वादः, न वा कस्यचिदर्थस्य स्वशब्दैः प्रतिपादनशक्तिस्तेषामुदेति। तस्या एतस्या दुर्दशायाः प्रतीकाराय पद्याक्षराणि अस्पृशन् स्पष्टो भावार्थोऽत्र प्रायेण सर्वेषामेव पद्यानां निवेशितः। इयमेवास्या व्याख्याया विशेषता नाम। तस्यैतस्य विचारे अवश्यमध्यापकमहोदयैश्छात्राः प्रोत्साह्याः प्रेरणीयाश्चेति सानुरोधं प्रार्थयामहे।

तदनु व्याख्यायामलङ्कारादिसंनिवेशः। अत्रैव व्यङ्ग्यार्थः, रसादिः, दोषा अलङ्काराश्च यथामति निर्दिष्टाः। विशारदपरीक्षार्थं प्राधान्ये-नायमुद्यम इत्युक्तमधस्तात्। विशारदपरीक्षायां चालङ्कारलक्षणग्रन्थोऽपि नियतस्तिष्ठति, तेषामलङ्कारादीनां लक्ष्यपरिज्ञानं छात्राणां यथा भवेत्, तदर्थमन्विष्यान्विष्य संभवन्तोऽलङ्कारा ये बुद्धौ प्रतिभातास्ते निवेशिता एव। यत्रालङ्कारस्य न प्रौढा चमत्कृतिः, तत्रापि स संभवमात्रेणोपन्यस्त एव च्छात्राणां परिचयाय। व्यङ्ग्या अपि चालङ्काराः क्वचिन्निर्दिष्टा एव। बहूनामलङ्काराणां यत्र स्थितिः, तत्र क्वचित्तेषां संसृष्टिसङ्करादिप्रभेदोपन्यासोऽपि कृतः, बहुत्र तु स उपेक्षित एव, तत्र मतिवैचित्र्येण बहुधा मत-भेदसंभवात्, अङ्गाङ्गिभावादेर्दुष्परिज्ञानत्वात्, छात्राणामेतद्विचारे क्लेशसं-भवाच्च। तथैव व्यङ्ग्यार्थं सर्वत्र प्रदर्श्यापि क्व ध्वनित्वम्, क्व गुणीभूतव्यङ्ग्यता, क्व वा व्यङ्ग्यं सर्वथा तिरोहितमित्यादिविचाराः सर्वत्र न प्रदर्शिताः, तत्र मतभेदसंभवादिति सहृदयैरेव तत्र तत्र तदूह्यम्। क्वचित्तु स्फुटं यत्र प्रती-तिस्तत्र तथापि विचारः कृत एव।

अलङ्कारादीनां च यत्राचार्यमतभेदेन द्वैधम्, तत्र 'यद्वा' इत्युपन्यस्य द्वयमपि निर्दिष्टम्। विस्तरभिया स्पष्टं तत्तन्मतोपन्यासस्तु न कृतः।

प्रायेणालङ्कारा: कुवलयानन्दमतमनुसृत्यात्र निर्दिष्टाः, क्वचिच्च मतान्तरेणापि। एषां चालङ्काराणां समन्वयाय सरलायाः पद्धतेः स्वीकारे महान् ग्रन्थविस्तरः संभाव्यते इति संक्षेप एवागत्या तत्राश्रितः। तेनात्र व्याख्यायामलङ्कारनिर्देशांशस्य क्वचिच्छात्रयोग्यतापेक्षया काठिन्यं जातम्, परं सारल्याय यत्ने महान् ग्रन्थविस्तरः स्यात्, तदनुपन्यासोऽपि च न समीचीन इत्यगत्यैव तथा कृतम्। अध्यापकमहोदयैः स्पष्टं सोंऽशश्छात्रेभ्यो बोधनीयः। भाषाकाठिन्यपरिहाराय च विभिन्नानां पदानां दुःखबोधः सन्धिः प्रायेण न कृतः, क्वचित्तु अभ्यासवशाज्जात एवेति तथाभ्यासश्छात्राणामप्यावश्यक एव।

तयानया व्याख्यया यदि च्छात्राणां व्युत्पत्तिलाभे कश्चिदुपकारः स्यात्, यदि च व्याख्याशैल्या, भावार्थनिर्देशेन, व्यङ्ग्यार्थालङ्कारादिसमुपन्यासेन च सहृदयानामपि कथंचिन्मनस्तोष आविर्भवेत्, तर्हि परिश्रममिमं सफलमाकलयिष्यामि। सहृदयानां दृष्टिपातस्त्वत्र सानुरोधमाशास्यते।

कवीनां व्याख्याकृतां च देशकालनिर्णयः, तच्चरितविचारः, काव्यतुलनां चेत्याद्या विषयाः सविवेचनं पृथगुपोद्घातरूपेण प्रकाशिताः स्युः।

अथास्मिन् द्वितीये भागे किरातार्जुनीयस्य द्वितीयतृतीयावेकादशश्चेति त्रयः सर्गाः संगृहीताः, शिशुपालवधस्य च प्रथमद्वितीयौ द्वाविति संभूय पञ्चानां सर्गाणां संग्रहोऽयम्। तत्र किरातार्जुनीयस्य द्वितीये सर्गे नीतिगाम्भीर्यम्, युधिष्ठिरस्यौदार्यं चानितरसाधरणं छात्राणामेकान्ततः शिक्षणयोग्यम्, तृतीये च महर्षेर्व्यासस्य, भीष्मादिशौर्यस्य द्रौपद्या हृदि प्रज्वलतो निकाराग्नेश्चेत्यादिवर्णनविशेषा महाकविप्रौढेरतिशये निकषायमाणाः सर्वथा च्छात्रोपयोगिनश्च, तथैवैकादशे कपटवेषेन्द्रप्रलोभितस्यार्जुनस्योक्तौ स्वाभिमानः प्रोज्ज्वलं प्रकाशते-इति च्छात्रोपयोगितां निर्धार्य सर्गा इमे संगृहीताः। शिशुपालवधस्य प्रथमः सर्गः सुप्रसिद्धतरः, वर्णनशैलीप्रौढतयापि च समुचितः, द्वितीयस्तु नीतिशिक्षणार्थं विशेषेणोपयुक्त इति तयोरत्र संग्रहः। अस्मिन् सर्गपञ्चके शृङ्गाररसस्य नास्त्येव प्रायेण समावेश इति मध्यमशिक्षाप्रविष्टच्छात्राणां कृते अयमेव संग्रहो युक्ततया निर्धारितोऽस्माभिः। अत्र

च किरातार्जुनीयस्य व्यासवर्णनम्–माघनिबद्धं नारदवर्णनम्, तत्र व्यास युधिष्ठिरसंवादः, इह कृष्णनारदसंवादः, तत्रापि द्वितीये सर्गे नीतेः पूर्वोत्तरपक्षरूपेण विस्तरः–इहापि च द्वितीये सर्गे तथैवेति बहुष्वंशेषु संवाद प्रतीयते, तेन सूक्ष्मया दृशा भावयतां छात्राणां तुलनारूपेणालोचनस्य पद्धतावपि प्रवेशः संभाव्यते, यतनीयं च तत्र तेषां व्युत्पादने पाठकमहाभागैरित्यपि संग्रह एतादृशोऽस्माकमस्त्यभिप्रायः। वयमेतादृशीमालोचनापद्धतिं पृथक्प्रकाशनीयायां भूमिकायां संक्षेपेण निदर्शयिष्यामः।

अस्यापि सर्गपञ्चकस्य व्याख्यायां श्रीमल्लिनाथसूरिनिबद्धा व्याख्यैव प्राधान्येनोपजीवितास्माभिः। यत्र तु विप्रतिपत्तिरस्माकम्, तत्र मल्लिनाथमतमनूद्य सा प्रदर्शिता। मल्लिनाथधृत एव च मूलपाठः प्रायेण समादृतः। टीकान्तरसंमतस्तु टिप्पण्यां निवेशितः। क्वचित् तु विशिष्टतया प्रतीतटीकान्तरसंमत एव पाठो मुख्यतया स्थापितः, मल्लिनाथसंमतस्तु तत्र टिप्पण्यां निवेशित इति युक्तायुक्तत्वे तत्र सहृदयैरेव विवेचनीये। किरातार्जुनीयस्य तु टीकात्रयमन्यदप्यस्माभिरालोचितम्, तत्रैकास्मत्प्रियसुहृदा वाराणसेयेन श्रीगौरीनाथपाठकमहाशयेन निबद्धा आदिमस्य सर्गत्रयस्य व्याख्या परीक्षार्थिच्छात्रोपयुक्ता। अत्र श्रीमल्लिनाथव्याख्या सर्वाप्यक्षरश उद्धृता, संक्षेपेण व्याकरणांशभावार्थौ वाच्यपरिवर्तनं चातिरिक्तानि निवेशितानि। द्वितीया गिद्धौरमहाराजाश्रितश्रीगतिनाथशर्मनिबद्धा आदिमस्य सर्गपञ्चकस्य एकादशादिचतुर्दशान्तस्य सर्गचतुष्टयस्य च व्याख्या, अत्र मल्लिनाथव्याख्याया अपि व्याकरणकोषाद्यंशान् निःसार्य संक्षेपेणान्ते विन्यस्य वा परः संक्षेपः कृतः, अग्रे हिन्दीभाषयापि श्लोकानामाशयोऽनूदितः। इमे द्वे अपि नवीने, मल्लिनाथव्याख्योपजीविके च। तृतीया तु ख्याततमवैदुष्यविभवेन विलुप्तसंस्कृतग्रन्थोद्धरणशीलतयाधिगतमहायशसा अस्मच्छ्रद्धाभाजनप्रियसुहृन्महामहोपाध्यायश्रीगणपतिशास्त्रिमहाभागेन संपादिता ट्रावनकोरसंस्कृतसिरीजनाम्न्यां ग्रन्थमालायां प्रकाशिता प्राचीना महापण्डितचित्रभानुकृता शब्दार्थदीपिकाख्या व्याख्या। इयमादिमस्य सर्गत्रयस्यैव प्राप्ता, तत्रापि च मध्ये क्वचित् खण्डिता। अतिविस्तृतेयं

व्याख्या । अस्यां पण्डितप्रकाण्डेन व्याख्यात्रा प्रायेण प्रतिपदं गम्भीर-व्यङ्ग्यार्थस्फोटने प्रयासः कृतः, तत्र क्वचिदुत्कृष्टत्वप्रतीतावपि बहुत्र स्वारसिका चमत्कृतिसारा अतिशयेन व्युत्पादकाश्च तदूहिता अर्था इत्यस्माकं बुद्धिः । 'भारवेरर्थगौरवम्' इति यत्प्रसिद्धतरं विद्वत्सु तदस्या एव व्याख्याया आलोचनेन प्रस्फुटं भवति । प्रतिपद्यं यादृशमर्थगौरवमत्र प्रकाशितं तद्भारविकवित्वशक्तेर्लोकातिशायि महत्त्वमवगमयितुं पर्याप्तम् । काव्येषु विशिष्टां व्युत्पत्तिमभिलषद्भिः प्रौढैरियमवश्यालोच्येति नो बुद्धिः । पदार्थानामपि निर्वचनमस्यामतिप्रौढ्या कृतम् । परं व्याख्याया अस्या लेखनशैली न तथा सरला, यथा मध्यमश्रेणिच्छात्राणामपीयमुपकुर्यात् । प्रौढाऽस्या लेखशैली प्रौढानामेवोपयुक्ता । आस्ताम्, एतत्प्रतिपादिताः सर्वेऽप्यर्था विस्तरभयान्नास्माभिः संग्रहीतुम् पारिताः, किन्तु बहलचमत्कृतयो विशिष्टा अर्थाः प्रायेण नोपेक्षिताः, क्वचिद् व्याख्यायां क्वचिद् भावार्थे क्वचिदलंकारादिषु चैतद्व्याख्योक्ता अर्थाः सरलया भाषया प्रदर्शिता अस्माभिः । पदार्थनिर्वचनमपि च बहुत्रास्याः संगृहीतम् । एतद् व्याख्यासंग्रहणेन यद्यपि छात्रोपकारिणीयं व्याख्या विशेषेण विस्तरं गता, परमेवंविधशैलीपरिशीलनेन छात्राणां व्युत्पत्तावुत्कर्षो भवेदिति नास्त्यत्र संशयलेशोऽपि ।

शिशुपालवधस्य तु मल्लिनाथव्याख्यातिरिक्तं न किमपि व्याख्यान्तरमस्मद्दृष्टिपथमवतीर्णम् । श्रीमल्लिनाथमहाशयेनापि च माघकृते व्याख्यान एव सकलः स्वीयः पुरुषार्थः प्रदर्शित इति सा व्याख्या विद्वत्समाजे प्रौढतमा गण्यते । तत एव शिशुपालवधे मल्लिनाथव्याख्यैवात्मक्रमेण विभज्य प्रायेण स्थापिता अस्माभिः । भावार्थस्य तु विशेषेण स्पष्टीकरणाय प्रयत्नः कृतः । किं च संग्रहोऽयं पञ्चनदविश्वविद्यालये विशारदपरीक्षायां पाठ्यत्वेन नियतोऽभूदित्यस्य मुद्रणविलम्बश्छात्राणां विशेषेण हानिकरः; कार्यान्तरव्यापृततया च नास्माभिः पूर्णः समयो व्याख्यापरिष्करणाय लब्ध इति माघव्याख्यानेऽभिनवता न जाता । विशेषेण तु द्वितीयसर्गव्याख्याने, तत्सम्पादनकाले ममाकस्मात्प्रबलो व्याधिः शरीर-

माक्रान्तवानित्यायुष्मतः श्रीपरमेश्वरानन्दशास्त्रिण एव शिरसि सर्वोऽपि भारः पतितः, शीघ्रतया च सम्पाद्यं कार्यमिति माघद्वितीयसर्गे सर्वथा मल्लिनाथव्याख्यानमनुसृत्यैव कार्यं समाप्तिं नीतम्। सति पुनर्मुद्रणावसरे माघकृतेर्व्याख्यानं विशेषेण परिष्क्रियेत।

यानि पदानि यद्विधानि वा पूर्वं व्याकरणरीत्या कृतनिर्वचनानि तेषां पुनः पुनर्निर्वचनं ग्रन्थगौरवायैवेति व्याकरणांश उत्तरोत्तरं व्याख्यायामल्पतां गत इत्युचितमेव। तथापि येषां निर्वचनमावश्यकम्, तानि क्वचिदनेकत्रापि स्मरणोपयोगाय निरुक्तानि। प्रथमभागे समासेषु कृताभ्यासानां छात्राणामग्रे न परिचयकाठिन्यमिति समासनामानि अस्मिन् भागे बहुत्र न निवेशितानि। यत्र निवेशितानि तत्र तच्छैली समासनामाद्याक्षरनिवेशनरूपा प्रथमभागवदेव, तद्रीत्यैव पाठकैः सम्यगवबोध्या। व्याख्यायान्तु क्रमेण पूर्वापेक्षया विस्तर एव कृतः। अस्मिन् भागे तत्तत्पदानां मुख्यार्थ-तत्तत्प्रकरणोचितार्थ-लक्ष्यार्थादिस्फुटीकरणाय एकैकस्य नैके पर्याया निवेशिताः, तत्र कः कीदृग्विधोऽर्थ इति शिक्षणीयं छात्रेभ्यः पाठकमहाभागैः। भावार्थस्फुटीकरणे व्यङ्ग्यार्थालङ्कारादिनिवेशने चापि विशेषेणात्र प्रयासः कृत इति तेऽपि विषया व्युत्पत्त्याधानाय विशेषेण छात्रेभ्यः शिक्षणीयाः।

पुस्तकप्रकाशनशीघ्रतयैव मुद्रणादर्शपत्र (प्रूफ) शोधनेऽपि बह्व्यस्त्रुटयः संभाव्यन्ते। पुनः सर्वं संग्रहं पर्यालोच्य शुद्धिपत्रनिवेशनमपि सैव शीघ्रता प्रतिबध्नातीति विदुषामेव शिरःसु संशोधनभारोऽयम्, तेऽस्य परिश्रमस्य कृते सविनयं क्षमामभ्यर्थ्यन्ते। अनेन संग्रहेण व्याख्यानेन च छात्राणां व्युत्पत्त्याधाने कियांश्चिदप्युपकारो विदुषां च मनागपि परितोषश्चेत् फलेग्रहिः स्यादयं मे प्रयासः।

अस्य सव्याख्यस्य संग्रहस्य संपादने संशोधनादौ च मदन्तेवासिना हरिद्वारस्थऋषिकुलब्रह्मचर्याश्रमस्य प्रथमस्नातकेन लवपुरीयसनातनधर्मसंस्कृतमहाविद्यालयस्याध्यापकेन विद्याभास्करश्रीपरमेश्वरानन्दशास्त्रिणा मम दक्षिणहस्तायितम्। व्याख्याया अपि प्रभूतोंऽशो मम परामर्शेन तेनैवोप-

निवद्ध इति स महोदय आशीर्भिरभिनन्द्यते मया। सनातनधर्मकालेजनाम्नो महाविद्यालयस्याध्यक्षेण (प्रिन्सिपल) एम्. ए. एम्. ओ. एल्. इत्युपाधिधारिणा श्रीमता रघुवरदयालुशास्त्रिणा च सत्परामर्शदानेन प्रकाशने साहाय्यसंपादनेन च सम्यगनुगृहीतोऽस्मीति तस्यापि महाभागस्य कृतज्ञतामावहामि। अन्यैश्च यैः सुहृद्भिः परामर्शदानेनोपकारः कृतस्तेषामपि कृतज्ञोऽस्मि।

लवपुरस्थेषु यन्त्रालयेषु संस्कृतग्रन्थमुद्रणस्य नास्ति तथा समुचिता व्यवस्था, न तदर्थं तथा योग्या अक्षरयोजकाः, नापि तदुपयुक्तसीसकाक्षरसंपत्तिः, अन्यत्र च मुद्रणाय दत्तं पुस्तकं काले न लब्धं स्यादिति भिया अत्रैव कथंचिन्मुद्रणमस्य संपादितम्। न च मुद्रणकाले मया समुचितोऽवकाशः कार्यान्तरपारवश्येन लब्ध इति अक्षरयोजकदोषेणास्माकं दृष्टिदोषेण मतिप्रमादेन च बहूनि स्खलितानि पुस्तकेऽस्मिन् संभाव्यन्ते। तदर्थं पाठकमहोदयानां क्षमामभ्यर्थयामहे, आशास्महे च त एव तत्र तत्र स्खलितानि विशोधयेयुरिति। यत्राधिकभ्रान्तिसंभवः, तथाविधानामशुद्धीनां शोधनाय शुद्धिपत्रमपि संनिवेशितम्। 'व' 'व' 'त्' 'द्' आदीनां वर्णानां विरामादिचिह्नानामनुस्वारमात्रादीनां त्वशुद्धयः स्वयमेव पाठकैः शोधनीयाः स्युः। जगदीश्वरानुग्रहेण प्रचारं प्राप्तेऽस्मिन् ग्रन्थे संस्करणान्तरे सर्वं सम्यक् कृतं स्यादिति।

---

# द्वितीयसंस्करणभूमिका ।

माननीया विद्वांसश्छात्राश्च !

सहर्षमिदमावेद्यते यदस्य महाकाव्यसंग्रहस्य प्रथमं संस्करणमतिशीघ्रं समाप्तिमगात् । अथेदमस्य द्वितीयं संस्करणं भवदग्रे समुपस्थाप्यते । वयं पञ्चनदीयसंस्कृतशिक्षनियामकसमितेः ( बोर्ड ) निरतिशयं कृतज्ञाः स्मो येनायं संग्रहो विशारदपरीक्षोपयोगीत्याकलय्याद्यापि पाठ्यक्रमे विनियोजितः । आशास्महे विद्यार्थिनोऽस्मात् संग्रहात् काव्यव्युत्पत्तौ कमप्यतिशयमर्जयन्तो नः परिश्रमं सफलयेयुः । अत्र द्वितीयसंस्करणे चिकीर्षितमपि विशेषं कर्तुं न पारितम् । संग्रहीतुरनवकाश एवात्र निदानम् । मुद्रणं त्वस्यावश्यं पूर्वापेक्षया सुष्ठु सम्पन्नम् । आशास्यते पाठकेभ्य इदं रोचिष्यते । यदि पञ्चनदीयसंस्कृत समितिवदन्या अपि वाराणसी-कालिकातादिषु प्रचरन्त्यः संस्कृतसंस्थाः संग्रहमिमं पाठ्यक्रमे नियुञ्जीरन्, तर्हि छात्राणां भूयान् लाभः सम्भाव्यते । इति ।

गिरिधरशर्म्मा चतुर्वेदः ।

* श्रीः *

जयतु भगवती वाचां देवी

# महाकाव्य-संग्रह

## (संग्रहे प्रथमः, रघुवंशे महाकाव्ये द्वितीयः सर्गः)

### ( छात्रोपकारिणी व्याख्या )

अलंकाराढ्यसर्वाङ्गीं भावाराध्यां रसात्मिकाम् ।
निरस्तदोषां सगुणामर्थदां वाचमाश्रये ॥ १ ॥

सिन्दूरपूरारुणिताखिलाङ्गो यज्ञोपवीतीकृतनागराजः ।
उद्दामविघ्नौघविघातदक्षः पायादपायादनिशं गणेशः ॥ २ ॥

महाकवीनां क्व वचांस्यनल्प-गाम्भीर्यहारीणि गुणौघभाञ्जि ।
मतिः क्व चेयं तरला तथापि यत्साहसं छात्रदयात्र हेतुः ॥ ३ ॥

व्याख्यास्तु सन्त्येव पदाभिधेय-विदे निबद्धाः खलु सूरिभिर्याः ।
न तादृशीयं भविता तथापि यत्साहसं छात्रदयात्र हेतुः ॥ ४ ॥

कथासम्बन्धः—सूर्यपौत्रस्य मनुपुत्रस्येक्ष्वाकोर्महाराजस्य वंश्यो राजर्षिर्दिलीपः प्रौढेऽपि वयसि सन्ततेरभावात्खिन्नो गुरोर्वशिष्ठस्य महर्षेराश्रमं गत्वा स्वस्यापुत्रतायाः कारणं प्रतीकारं च जिज्ञासते स्म । तेन च 'स्वर्लोकादागच्छता त्वया मार्गे कामधेनुः प्रमादान्न सत्कृता, तत एव ते सन्ततेः प्रतिबन्धः । अधुना मदाश्रमस्थां कामधेनुसुतां नन्दिनीमाराधय, प्रसन्नायामस्यां फलिष्यति मनोरथः' इत्यनुशिष्टः । ततस्तदाज्ञया तत्रैवाश्रमे क्वचित्पर्णशालायां सभार्यो वसतिं प्रकल्प्य रात्रौ सुप्त इति प्रथमसर्गे गतम् । तदनन्तरं वृत्तमुच्यते—

अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥

**अन्वयः**—अथ यशोधनः प्रजानाम् अधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् पीतप्रतिबद्धवत्साम् ऋषेः धेनुम् वनाय मुमोच ।

व्याकरणम्—यशोधनः-यश एव धनं यस्य सः ( बहु० ) जायाप्रतिग्राहितगन्धमाल्याम्-जायतेऽस्यां सन्ततिरूपेण स्वयमिति जाया, गन्धश्च माल्यञ्च गन्धमाल्ये, ( द्व० ) जायया प्रतिग्राहिते ( तत्पु० ) गन्धमाल्ये यया ताम्, ( बहु० ) प्रतिग्राहितेति णिजन्ताद् गृह्णातेः कर्मणि क्तः, गन्धमाल्ये इति तत्कर्म, जाया प्रयोजककर्त्री, ययेत्यन्यपदार्थो धेनुस्तु प्रयोज्यकर्त्री। धेनुर्गन्धमाल्ये प्रत्यग्रहीत्, तां जाया प्रैरिरदिति जाया धेन्वा ( यया ) गन्धमाल्ये प्रतिग्राहितवतीति कर्तरि प्रयोगः। मालैव माल्यम्, स्वार्थे ष्यञ्। पीतप्रतिबद्धवत्साम्-पूर्वं पीतः पश्चात् प्रतिबद्धो वत्सो यस्यास्ताम् ( बहु० )। पानम्-पीतम्, "नपुंसके भावे क्तः" ततः पीतमस्यास्तीति विग्रहे अर्शआद्यच्प्रत्ययो मत्वर्थीयः। 'भुक्ता ब्राह्मणाः' इत्यादिवत्। यद्वा-अविवक्षितकर्मत्वेनाकर्मकत्वमभ्युपगम्य "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" इति पाधातोः कर्तरि क्तः। प्रतिबद्ध इति प्रतिपूर्वाद् बध्नातेः क्तः, कित्त्वान्नलोपः। प्रजायन्त इति प्रजाः, प्रपूर्वाज्जनेः "उपसर्गे च संज्ञायाम्" इति डः। अधिपातीत्यधिपः, "आतश्चोपसर्गे" इति कः। वनायेति "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति तुमुन्नर्थयोगे चतुर्थी। मुमोच-तौदादिकमुञ्चतेर्लिटि रूपम्। अत्र-अथेत्यव्ययं पूर्वोक्तानन्तर्ये, प्रजानामित्यधिपसम्बन्धे षष्ठी, अधिप इति मुमोच-क्रियायाःकर्ता, लकारेण उक्ते कर्तरि प्रातिपदिकार्थमात्रे प्रथमा, प्रभाते-इति कालस्याधिकरणत्वविवक्षया सप्तमी, जायाप्रतिग्राहितगन्धमाल्यामिति पीतप्रतिबद्धवत्सामिति च धेनुविशेषणद्वयम्। वनायेत्यध्याहृतगमनक्रियायाः कर्म। यशोधन इति कर्तृविशेषणम्, धेनुमिति प्रधानक्रियायाः कर्म। ऋषेरिति धेनोस्सम्बन्धे षष्ठी। मुमोचेति भूतानद्यतनपरोक्षार्थकः कर्तृवाचको लकारः। एवं सर्वत्रानुसन्धेयम्।

व्याख्या—अथ-रात्रिनयनानन्तरम्, यशोधनः-यशः—कीर्तिरेव धनं-द्रविणं यस्य, तथाभूतः, * प्रजानाम्-जनानाम्, अधिपः-स्वामी, राजा, दिलीप इति यावत्; प्रभाते-प्रातःकाले, जायाप्रतिग्राहितगन्धमाल्याम्—जायया—भार्यया—सुदक्षिणयेति यावत्, प्रतिग्राहिते-स्वीकारिते, गन्धमाल्ये-अर्चनाङ्गभूते चन्द-

* प्रजा स्यात्सन्ततौ जने-इत्यमरः।

नस्रजौ यया तथोक्ताम्, पीतप्रतिवद्धवत्साम्—पूर्वं पीतः-कृतस्तन्यपानः पश्चाच्च स्वस्थाने प्रतिबद्धो वत्सो यस्यास्तथोक्ताम्, †ऋषेः-वशिष्ठस्य, धेनुम्-गां नन्दिनीम्, वनाय-वनं गन्तुम्, मुमोच-अनिवारितगमनां चकार ।

भावार्थः—दिलीपः प्रातरेव कृतस्तन्यपानं नन्दिन्या वत्सं स्वस्थाने बद्ध्वा सुदक्षिणया गन्धमाल्यादिभिः पूजितां नन्दिनीं धेनुं वने स्वच्छन्दविहारार्थं मुमोच ।

अलङ्कारादिः—यशोधन इति यशसि धनत्वारोपेण निरङ्गरूपकमर्थालङ्कारः । शब्दालङ्कारश्च छेकानुप्रासो वृत्त्यनुप्रासश्च । असन्ततावपि सुदक्षिणायां जायापदप्रयोगात्तस्यां पुत्रोत्पत्तियोग्यता व्यज्यते । यशोधन इति राज्ञः प्रवृत्तिरस्मिन् कर्मण्यपुत्रतारूपायशःक्षालनार्थमिति ध्वन्यते; प्रजानामधिप इति पुत्रोत्पादनस्यावश्यकतां व्यनक्ति, तेन साभिप्रायविशेषणद्वयेन परिकरोऽप्यलङ्कारः । जायाप्रतिग्राहितेति च जायाया अनुगतिं व्यनक्ति । अस्मिन् सर्गे इन्द्रवज्रोपेन्द्रवज्रयोर्योगादुपजातिश्छन्दः ।

**तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया ।**
**मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ २ ॥**

अन्वयः—अपांसुलानाम् धुरि कीर्तनीया मनुष्येश्वरधर्मपत्नी तस्याः खुरन्यासपवित्रपांसुम् मार्गम् स्मृतिः श्रुतेः अर्थम् इव अन्वगच्छत् ।

व्याकरणम्—अपांसुलानाम् न पांसुलानाम्, ( न० त० ) पांसवो दोषा आसां सन्तीति पांसुलाः, सिध्मादित्वाल्लच् प्रत्ययस्तद्धितः । मनुष्याणामीश्वरः, ( ष०त० ) तस्य धर्मपत्नी ( ष० त० ) मनुष्येश्वरधर्मपत्नी । धर्मार्था पत्नीति मध्यमपदलोपी तत्पुरुषः, धर्मस्य पत्नीति-अश्वघासादिवत्सम्बन्धसामान्ये षष्ठीसमासो वा । खुरन्यासपवित्रपांसुम्-खुराणां न्यासैः ( ष० त० ) पवित्राः ( तत्पु० ) पांसवो यस्मिन् ( बहु० ) तम् । कीर्तनीया-कीर्तयितुं योग्येति कृतधातोर्णिजन्तात् कर्मणि 'अनीयर्' । ईश्वरः-'ईष्टे' इति वेग्रहे "स्थेशभासपिसकसो वरच्" इति वरच् । पत्नी-पतिशब्दस्य "पत्युर्नो यज्ञसंयोगे" इति नकारान्तादेशः, नान्तत्त्वाद् ङीप् च । श्रुतिः, स्मृतिः-उभयत्र

* "मन्त्रद्रष्टार ऋषयः" ।

क्रमशः शृणोतेः स्मरतेश्च क्तिन् , "श्रयजीपिस्तुभ्यः करणे" इति पूर्वत्र । अन्वगच्छत्-अनुपूर्वाद्गमेर्लङि "इषुगमियमां छः" । श्रुतेरिति तत्पदद्योत्याया धेनोरुपमानविशेषणम् । स्मृतिरिति च धर्मपत्न्या उपमानविशेषणम् । इवेति सादृश्यार्थकमव्ययम् ।

व्याख्या—अपांसुलानाम्-पापरहितानाम् , पतिव्रतानाम् , धुरि-अग्रे, कीर्तनीया—कथयितुं योग्या-परिगणनीया , मनुष्येश्वरस्य—राज्ञो दिलीपस्य, धर्मपत्नी-भार्या-सुदक्षिणा , तस्याः नन्दिन्याः, * खुराणां न्यासैः-निक्षेपैः, पवित्राः, † पांसवः-धूलयो यस्मिन् , तथोक्तम् , मार्गं-पन्थानम् , स्मृतिः-मन्वादिप्रणीतं धर्मशास्त्रम् , श्रुतेः-वेदस्य, अर्थम्-वाच्यं यथा, तथा अन्वगच्छत् , अनुसृतवती ।

भावार्थः—यथा स्मृतिः श्रुतिविहितमेव पवित्रमर्थमनुविदधती श्रुतिमनुगच्छति, तथैव पतिव्रताशिरोमणिः सुदक्षिणापि तां गामनुजगाम, तस्याः पादैः पवित्रे पथि स्वयमपि गन्तुं प्रवृत्ता बभूवेति ।

अलङ्कारादिः—उपमात्रार्थालङ्कारः स्फुटः । स्मृतिरुपमानम् , सुदक्षिणा चोपमेया, अनुगमनं साधारणो धर्मः, गो-श्रुत्योः पथ्यर्थयोश्च बिम्बप्रतिबिम्बभाव उपमाप्रयोजकः । वृत्त्यनुप्रासः शब्दालंकारः । पांसुले पथि प्रवृत्तापि सुदक्षिणा स्वयमपांसुलेति विरोधाभासो व्यज्यत इति मल्लिनाथः । धर्मपत्नीति सुदक्षिणायां धर्माचरणयोग्यता व्यज्यते । यथा श्रुतिमनुगतैव स्मृतिः सुफला, तथा गामनुगच्छन्ती सुदक्षिणेति च व्यङ्ग्यम् ।

निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥

अन्वयः—दयालुः यशोभिः सुरभिः राजा दयिताम् निवर्त्य पयोधरीभूतचतुःसमुद्राम् गोरूपधराम् उर्वीमिव तां सौरभेयीं जुगोप ।

व्याकरणम्—पयोधरीभूतचतुःसमुद्राम्—धरन्तीति धराः, पचाद्यच् । पयसां धराः पयोधराः, (ष०त०) अपयोधराः पयोधरा यथा सम्पद्यन्ते, तथा भूताः पयो-

---

* शफं क्लीबे खुरः पुमान्—इत्यमरः ।

† रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः—इत्यमरः ।

धरीभूताः, अभूततद्भावेऽर्थे " कृभ्वस्तियोगे संपद्य कर्तरि च्विः " इति च्विप्रत्ययः, ईत्वम् । " कुगतिप्रादयः " इति समासः । तथाभूताः चत्वारः समुद्रा यस्यास्ताम् ( बहु० ) । धेनुपक्षे तु-अनधरा अधराः संपद्यमाना अधरीभूताः ( तत्पु० ) चत्वारः समुद्रा यस्यास्ताम् ( बहु० ) इति मल्लिनाथः । गोरूपधराम्–गोरूपस्य ( ष०त० ) धराम् ( ष०त० ) । निवर्त्य–नि-इत्युपसर्गपूर्वकाद्वर्ततेः पूर्वकाले क्त्वा, तस्य समासे ल्यबादेशः । दयालुः–दयधातोः– "स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्" । सुरभेरपत्यं सौरभेयी, ढक्प्रत्ययस्तद्धितः । दयितामिति निवर्त्येत्यप्रधानक्रियायाः कर्म । यशोभिरिति हेतौ तृतीया ।

व्याख्या—दयालुः–कृपावान्, यशोभिः—कीर्तिभिः, *सुरभिः–मनोज्ञः, राजा–नृपतिः–दिलीपः, दयितां-प्रियां–सुदक्षिणाम्, निवर्त्य–गमनान्निवार्य, † पयोधरीभूताः—स्तनतां प्राप्ता इव चत्वारः समुद्रा यस्यास्तथाभूताम्, यद्वा पयोधरीभूताः—स्तनस्थानस्थिताः, लोकानां पयःप्रदत्वेन पयोधरतुल्याश्च चत्वारः समुद्रा ‡ यस्यास्तथाभूतामिति पृथ्वीपक्षे, पयसा दुग्धेन अधरीभूतास्तिरस्कृताश्चत्वारः समुद्रा यस्यास्तथोक्ताम्-इति धेनुपक्षे, गोरूपधराम्-धेन्वाकारधारिणीम्, उर्वीम्–पृथ्वीम् इव भासमानाम्, तां-पूर्वोक्ताम्, सौरभेयीम्-सुरभेः–कामधेनोः सुताम्, नन्दिनीम्, जुगोप-ररक्ष ।

भावार्थः—भूपतिः किञ्चिद्दूरं गत्वा-अनुयान्तीं प्रियां सुदक्षिणां ' परिश्रान्ता मा भूत् '—इत्याश्रमं प्रति निवर्तयामास । स्वयं च येन प्रयत्नेन समुद्रमेखलां कृत्स्नां पृथ्वीं रक्षति स्म, तेनैव तां गामपि ररक्ष । यत इयं गौर्गोरूपधारिणी साक्षात् पृथिवीव संभाविता । अस्याःस्तनाश्च समुद्रत्वेन सम्भाविताः, उभयोः पयःप्रदत्वं मध्यस्थितत्वं च सादृश्यमिति ।

अलङ्कारादिः—उत्प्रेक्षानामार्थालङ्कारः, उपमायां गोरूपधरामिति विशेषणस्यासामञ्जस्यप्रसङ्गात् । निरुक्तसादृश्येन केवलोर्व्या अप्युपमानत्वसंभवात् । न

---

* सुरभिः स्यान्मनोज्ञेऽपि–इति विश्वः ।

† स्त्रीस्तनाब्दौ पयोधरौ–इत्यमरः ।

‡ समुद्रोऽब्धिरकूपारः–इत्यमरः ।

च गोरूपधारिण्या कयाचिदन्ययोर्व्या सहेयं नन्दिन्युपमातुमिष्टा, अपि त्वत्रैव गोरूपधरोर्वीत्वं संभाव्यत इत्येव कवेरभिप्रायः प्रतीयते । पयोधरीभूतचतुःसमुद्राम्-इति संभावनाप्रयोजकम् । स्तनेषु समुद्रत्व-सम्भावनाया गवि पृथिवीत्व-सम्भावनायामङ्गभूतत्वात् । अस्य विशेषणस्यार्थद्वयं मल्लिनाथरीतिमनुरुध्यैव व्याख्यातम्, वस्तुतस्तु उपमाया अत्राभावेन धर्मस्योभयत्रानुगतयेऽर्थद्वय-कल्पना व्यर्था । स्तनेषु समुद्रत्वं सम्भाव्यते-इत्येव ज्यायः । दयितामिति दयालुरिति च-निवर्तनेहेतुतया साभिप्राये विशेषणे, सुरभिरिति सौरभेयीमिति च रक्षणे तथेति परिकरः कुवलयानन्दमते। राजा सुरभिः, धेनुस्तु सुरभेरपत्य-मिति रक्षा युक्तैवेत्यभिसन्धिः । अनुप्रासश्च शब्दालङ्कारः। ससमुद्रसकल-पृथिवीरक्षणप्रयत्नेन गोरक्षा व्यज्यते ।

व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः ।
न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥ ४ ॥

अन्वयः—व्रताय धेनोः अनुचरेण तेन शेषः अपि अनुयायिवर्गः न्यषेधि। तस्य शरीररक्षा च अन्यतः न (अस्ति), हि मनोः प्रसूतिः स्ववीर्यगुप्ता (अस्ति) ।

व्याकरणम्—स्वस्य वीर्येण ( ष० त० ) [illegible] स्ववीर्यगुप्ता, "कर्तृकरणे कृता बहुलम्" इति तत्पुरुषः । व्रताय [illegible] तादर्थ्ये चतुर्थी । अनुचर इति अनुचरतीति "चरेष्टः" । शिष्यत इति शेषः, "अकर्तरि च कारके संज्ञायाम्" इति कर्मणि घञ् । अनुयान्ति तच्छीला अनुयायिनः, यातेस्ताच्छील्ये णिनिः । न्यषेधीति निपूर्वात् सेधतेः कर्मणि लुङ्, चिण् "प्राक् सितादड्व्यवायेऽपि" इति षत्वम् । रक्षणं रक्षा, "गुरोश्च हलः" इति स्त्रियामप्रत्ययः । अन्यतः पञ्चम्यर्थे तसिल् । प्रसूतिः—"स्त्रियां क्तिन्" । गुप्ता-गोपायतेः क्तः ।

व्याख्या-व्रताय-गोसेवारूपनियमार्थम्, धेनोः-गोः-नन्दिन्याः, अनुचरेण अनुयायिना, सेवकेनेत्यर्थः, तेन दिलीपेन, शेषः-सुदक्षिणातिरिक्तोपि, अनुयायि-वर्गः-अनुचरसमूहः, न्यषेधि-निवर्तितः । तस्य-दिलीपस्य, शरीररक्षा-शरीरस्य-देहस्य, रक्षा-गोपनम्, च, अन्यतः-अन्यं पुरुषं निमित्तीकृत्य नास्ति । हि यतः, मनोःप्रसूतिः-सन्ततिः, स्ववीर्यगुप्ता-स्वस्यात्मनो वीर्येण पराक्रमेणैव गुप्ता-रक्षिता सततमस्ति, नान्येन ।

भावार्थः—भूपतिः सह गच्छन्तमितरमप्यनुचरवर्गं निवर्तयांचकार । यतो व्रतनिष्ठस्यास्य न प्रभावदर्शनार्थमनुचरापेक्षा, व्रते कर्मणां स्वेनैव संपाद्यत्वात् । स्वशरीररक्षार्थं तु न कदाप्यस्यानुचरापेक्षा जायते स्म, यतो मनुवंशजा आत्मरक्षणमात्मपराक्रमेणैव विदधते, परान्नापेक्षन्त एव ।

अलङ्कारादिः—अत्र व्रतायेत्यनेन व्रतायैव धेनोरनुचरणम्, न पुनरन्यस्मै जीवनादिप्रयोजनायेति मल्लिनाथः, तेन परिसंख्यालङ्कारः सिद्धयति । वयन्तु जीवनादिव्यावृत्तेर्नात्र प्रयोजनं चमत्कृतिं वा पश्यामः । व्रतायेति–अनुयायिनिवर्तने हेतूपन्यासात् काव्यलिङ्गम् । एवं पूर्वार्धवाक्यार्थे-उत्तरार्धवाक्यार्थस्य हेतुत्वेनापि काव्यलिङ्गम् । उत्तरार्धवाक्ये पूर्वस्यांशस्य परेणांशेन समर्थनादर्थान्तरन्यासश्च । अनुप्रासस्तु कथंचित् सर्वत्र स्थित एव ।

आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥५॥

अन्वयः—सम्राट् सः आस्वादवद्भिः तृणानाम् कवलैः कण्डूयनैः दंशनिवारणैः अव्याहतैः स्वैरगतैः च तस्याः समाराधनतत्परः अभूत् ।

व्याकरणम्—*सम्राट्-सम्यग् राजत इति राजतेः क्विप्, "मो राजि समः क्वौ" इत्यनुस्वारनिषेधः । न व्याहतैः अव्याहतैः ( न० त० ) व्याहतैरिति व्याङ्पूर्वकाद्धन्तेः कर्मणि क्तः । स्वैरं गतानि—"सह सुपा" इति केवलसमासः, गतानीति गच्छतेः "नपुंसके भावे क्तः" । तदेव परं यस्य सः तत्परः ( बहु: ) समाराधने तत्परः समाराधनतत्परः । ( तत्पु० ) आस्वादवद्भिः-आस्वादो विद्यते येषु तैरिति थवन्ताद् आस्वादशब्दादस्त्यर्थे मतुप् । "मादुपधायाः" इत्यादिना मस्य वः । कण्डूयनैः—कण्डूञ्धातोर्ल्युट्, कण्ड्वादित्वाद् यक् च । निवारणम्, समाराधनम्, इति च णयन्ताल्ल्युट् । दशन्तीति दंशाः, पचाद्यच् ।

व्याख्या—सम्राड्-मण्डलेश्वरः, चक्रवर्तीति यावत्, सः-दिलीपः, आस्वादवद्भिः-रसविशिष्टैः, तृणानाम्-घासानाम्, [1] कवलैः-ग्रासैः, कण्डूयनैः-

* येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्—इत्यमरः । १—ग्रासस्तु कवलार्थकः—इत्यमरः ।

नखादिना खर्जनैः, दंशनिवारणैः-[1]दंशानां वनमक्षिकाणाम् ,निवारणैः-दूरीकरणैः, अव्याहतैः-अप्रतिरुद्धैः, [2]स्वैरगतैः-स्वच्छन्दगमनैश्च, तस्याः-नन्दिन्याः, समाराधने-सेवायाम्, [3] तत्परः-आसक्तः-संलग्नः, अभूत् ।

भावार्थः—दिलीपः कदाचित् कोमलतृणग्रासानुपानयति स्म, कदाचिन्नखादिना गात्रं विघृष्य खर्जूं विनोदयति स्म, वनमक्षिकाणां च दूरीकरणेन सततं रक्षति स्म । न च कुत्रापि यथेच्छं गच्छन्तीं तां निवर्तयामास-इत्येवं सेवायां प्रवृत्तः । सम्राडप्येवमाराधयतीत्यहो !

अलङ्कारादिः—अत्रैकस्मिन् समाराधने कार्येऽनेकेषां साधनानामुपादानात् समुच्चयोऽलङ्कारः । सम्राडपि समाराधनतत्पर इति विरोधालङ्कारोऽपि । गोविषयिणी भक्तिः प्राधान्येन व्यज्यते, तस्याश्च गोदेवतात्वाद्भावध्वनिः ।

स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥ ६ ॥

अन्वयः—भूपतिः तान् स्थितान् ( सतीमनु ) स्थितः ( सन् ) प्रयाताम् ( सतीमनु ) उच्चलितः ( सन् ) निषेदुषीन् ( सतीमनु ) आसनबन्धधीरः ( सन् ) जलम् आददानान् ( सतीमनु ) जलाभिलाषी ( सन् ) छायेव अन्वगच्छत् ।

व्याकरणम्—आसनस्य बन्धे ( प० त० ) धीरः ( तत्पु० ) आसनबन्धधीरः । आस्यतेऽस्मिन्निति-आसनम् , अधिकरणे ल्युट् । बन्धनं बन्धः, भावे घञ् । जलमभिलष्यतीति जलाभिलाषी "सुप्यजातौ णिनिस्ताच्छील्ये" क्वचिज्जातावपि. उपपदसमासः । छायेव—".इवेन नित्यसमासो विभक्त्यलोपश्च" इति केवलसमासः । स्थितः, स्थिताम् , उच्चलितः, प्रयाताम् इति कर्तरि क्तान्ताः, आद्ययोरकर्मकत्वादन्त्ययोर्गत्यर्थत्वात् । आद्ययोः 'द्यतिस्यतिमास्थामित्ति किति" इति स्थाधातोरित्वम् । निषेदुषीम् निषसादेति विग्रहे निपूर्वात् 'षद्लृ' धातोः "भाषायां सदवसश्रुवः" इति क्वसुः, स्त्रीत्वविवक्षायामुगित्त्वान्ङीप् , वसोरिति सम्प्रसारणम् । आददानाम्-आङ्पूर्वाद्दाधातोः "आङो दोऽनास्यविहरणे" इत्यनेनात्मनेपदे शानच्प्रत्ययः । स्थिताम् , प्रयाताम् , निषेदु-

१—दंशस्तु वनमक्षिका—इत्यमरः । २—स्वेच्छा यदृच्छा स्वच्छन्दः स्वैरता चेति ते समाः—इति केशवः । ३—तत्परे प्रसितासक्तौ—इत्यमरः ।

णीम्, जलमाददानामिति सदन्तानि कर्मविशेषणानि, स्थित इत्यादीनि च तथैव कर्तुः ।

व्याख्या—भूपतिः-राजा, दिलीपः, ताम्-नन्दिनीम्, स्थिताम्-निवृत्तगमनामूर्ध्वमवतिष्ठमानां सतीमनु-तथा दृष्ट्वा ततः पश्चादिति भावः, ( एवमग्रेऽपि ) स्थितः-निवृत्तगमनः सन्, प्रयाताम्-प्रस्थितां सतीम्, उच्चलितः-प्रस्थितः सन्, निषेदुषीम्-उपविष्टां सतीम्, आसनबन्धधीरः-आसनबन्धे उपवेशने, धीरोऽव्याकुलः, उपविष्टः सन्निति यावत्, जलम्-पानीयम्, आददानाम्-गृह्णतीम्-पिबन्तीं सतीम्, जलाभिलाषी-जलेच्छुः, स्वयमपि जलं पिबन् सन्, इत्थं छायेव-प्रतिबिम्बमिव, अन्वगच्छत्-अनुसृतवान् ।

भावार्थः—यथा छाया छायिनि चेष्टमान एव स्वयमपि तद्वच्चेष्टते, न तु स्वतन्त्रा, तथैव दिलीपोऽपि गवि तत्तदवस्थानप्रस्थानोपवेशनादिक्रियाः कुर्वत्यामेव स्वयमपि तास्ताः क्रियाश्चकार, न तु स्वयं तां कस्यामपि क्रियायां प्रेरयामास ।

अलङ्कारादिः—पूर्णोपमालङ्कारः । छायोपमानम्, राजा चोपमेयः । अनुगमनं सामान्यधर्मः । भूपतिरप्येवमन्वगच्छदिति विरोधोऽप्यलङ्कारः । पूर्ववद् भावध्वनिः । अत्र प्रक्रमभङ्गदोषमप्याहुः, 'स्थितः स्थिताम्' इत्यत्रेव 'उच्चलितः प्रयाताम्' इत्यादिषु येन धातुना प्रक्रान्तं तेन न निर्वाह इति ।

स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः ।
आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः ॥७॥

अन्वयः—न्यस्तचिह्नाम् अपि तेजोविशेषानुमिताम् राजलक्ष्मीम् दधानः सः अनाविष्कृतदानराजिः अन्तर्मदावस्थः द्विपेन्द्र इव आसीत् ।

व्याकरणम्—न्यस्तानि चिह्नानि यस्यास्तां न्यस्तचिह्नाम् ( बहु० ) निपूर्वादस्यतेः कर्मणि क्तप्रत्यये-न्यस्तानि । तेजसो विशेषेण ( ष० त० ) अनुमिताम् ( तत्पु० ) तेजोविशेषानुमिताम्, अन्वमायीत्यनुमिता, मिनोतेः कर्मणि क्तः । न आविष्कृता ( न० त० ) दानस्य राजिः ( ष० त० ) यस्य ( येन वा ) सः ( बहु० ) अनाविष्कृतदानराजिः । आविः—इत्यव्यये

उपपदे करोतेः क्तप्रत्यये आविष्कृता। "इदुदुपधस्य चाप्रत्ययस्य" इति पत्वम्। अन्तर्मदस्यावस्था ( ष० त० ) यस्य ( बहु० ) सोऽन्तर्मदावस्थः। अवस्था-इत्यत्रावपूर्वकात्तिष्ठतेः "व्यवस्थायाम्" इति निर्देशाज् ज्ञापकादङ् स्त्रियाम्। द्वाभ्यां पिबन्तीति द्विपाः—"सुपि" इति योगविभागात्कः, तेषामिन्द्रः ( ष० त० ) द्विपेन्द्रः। दधानः-इति धाधातोः 'लक्षणहेत्वोः क्रियायाः' इति शानच्।

व्याख्या—न्यस्तानि-परिहृतानि, चिह्नानि-लक्षणानि छत्रचामरादीनि यस्याः, तथाभूताम् अपि, तेजसः-कान्तेः, विशेषोऽतिशयस्तेनानुमिताम्, 'सर्वथा राजैवायम्' इत्यूहिताम्, राजलक्ष्मीम्-नृपश्रियम्, दधानः-धारयन्, सः दिलीपः, अनाविष्कृता-बहिरप्रकटिता, दानराजिर्मदरेखा यस्य, येन वा, एवंभूतोऽपि, अन्तर्मदावस्थः-अन्तः-अभ्यन्तरे मदस्यावस्थितिर्यस्य तथाभूतः, यद्वा-अन्तःस्थितमदा अवस्था-दशा यस्य तथाभूतः, द्विपेन्द्रः-उत्कृष्टो हस्तीव आसीत्-अशोभतेति यावत्।

भावार्थः—नन्दिनीं परिचरन् दिलीपो यद्यपि छत्रचामरादिराजचिह्नं त्यक्तवान्, तथापि केनचिदाकृतौ लक्ष्यमाणेन स्वाभाविकेन राजतेजसा 'राजैवायम्' इति लोकैरन्वमीयत। यथा गण्डस्थलेऽनालक्षितमदरेखोऽपि गजेन्द्र आकारेणैव मत्त इत्यनुमीयते, तद्वदिति।

अलङ्कारादिः—राजलक्ष्मीमदावस्थयोर्बिम्बप्रतिबिम्बभावात् पूर्णोपमा। न्यस्तचिह्नापि राजलक्ष्मीरन्वमीयतेति विभावना च।

लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम्।
रक्षापदेशान्मुनिहोमधेनोर्वन्यान् विनेष्यन्निव दुष्टसत्त्वान् ॥८॥

अन्वयः—लताप्रतानोद्ग्रथितैः केशैः ( उपलक्षितः ) सः अधिज्यधन्वा ( सन् ) मुनिहोमधेनोः रक्षापदेशाद् वन्यान् दुष्टसत्त्वान् विनेष्यन्निव दावम् विचचार।

व्याकरणम्—लतानां प्रतानैः ( ष० त० ) उद्ग्रथिताः ( तत्पु० ) लताप्रतानोद्ग्रथिताः, तैः। प्रतन्यन्त इति प्रतानाः, तनोतेरकर्तरि कारके घञ्। उद्ग्रथितेति ग्रन्थधातोः निष्ठायां क्त्वाञ्नलोपः। ज्यामधिगतमधिज्यम्,

"अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति तत्पुरुषः । अधिज्यं धनुर्यस्य सोऽधिज्यधन्वा, बहुव्रीहिः "धनुषश्च" इत्यनङ् समासान्तः । होमार्था धेनुर्होमधेनुः, शाकपार्थिवादित्वान्मध्यमपदलोपः, होमस्य धेनुरिति (ष० त०) वा, धर्मपत्नीतिवत् । दुष्टान् सत्त्वान् दुष्टसत्त्वान् इति कर्मधारयः । विनेष्यन्-विपूर्वान्नीधातोः "लृटः सद्वा" इति हेतौ लृटः शत्रादेशः । विचचारेति चरतेर्लिट् । केशैरिति "इत्थंभूतलक्षणे" तृतीया । दावमिति "देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञकः" इति कर्मत्वम् । अपदेशः-दिशेर्घञ् । वन्यान् वनशब्दाद् यत् तद्धितः । दुष्ट इति दुष्यतेः क्तः ।

व्याख्या—लतानाम्—वल्लीनाम्, प्रतानैः कुटिलतन्तुभिः, उद्ग्रथिताः उन्नमय्य बद्धाः, ये [1]केशास्तैरुपलक्षितः, तेन चिह्नेन चिह्नित इति यावत्, सः-दिलीपः, अधिज्यधन्वा-अधिज्यमारोपितमौर्वीकम्, धनुर्यस्य (हस्ते) तथाभूतः सन्, मुनिहोमधेनोः—मुनेः-वसिष्ठस्य, होमधेनोः-होमसाधनभूतायाः गोः, रक्षापदेशाद्-रक्षाया अपदेशाद्-व्याजात्, वन्यान् आरण्यकान्, दुष्टसत्त्वान्[2]-क्रूरजन्तून्, विनेष्यन्निव-शिक्षयिष्यन्निव-दमयिष्यन्निवेति, तद्दमनार्थमिति यावत्; दावम्[3]-वनम्, तत्रेत्यर्थः, विचचार-परिबभ्राम ।

भावार्थः—दिलीप इतस्ततः प्रकीर्णान् स्वान् केशान् लतातन्तुभिरूर्ध्वं संयम्य सज्जं धनुरादाय गामनुगच्छति स्म, तत्स्वरूपेणेत्थं प्रतीयते स्म, यदयं वन्यानां दुष्टजन्तूनां प्रजासूपद्रवकारिणां शासनार्थमेव वने भ्रमति, गोरक्षा तु तत्र व्याजमात्रमिति ।

अलङ्कारादिः—रक्षापदेशेत्यत्रापदेशशब्देन प्रकृतगोरक्षणस्यापह्नवेनापह्नुतिरङ्गम्, दुष्टसत्त्वविनयस्य भ्रमणफलत्वेन सम्भावनात्फलोत्प्रेक्षा मुख्या । तया च दिलीपस्य राजकर्तव्यनिष्ठायामुत्कर्षो व्यज्यते ।

विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य ।
उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥ ९ ॥

---

१—चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः—इत्यमरः । २—द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु—इत्यमरः । ३—वने च वनवह्नौ च दवो दाव इहेष्यते—इति यादवः ।

अन्वयः—विसृष्टपार्श्वानुचरस्य पाशभृता समस्य तस्य पार्श्वद्रुमाः उन्मदानाम् वयसाम् विरावैः आलोकशब्दम् उदीरयामासुः इव ।

व्याकरणम्—पार्श्वेऽनुचराः पार्श्वानुचराः, (तत्पु०) विसृष्टाः पार्श्वानुचराः येन, (बहु०) तस्य विसृष्टपार्श्वानुचरस्य । उत्कटो मदो येषां (बहु०) तेषामुन्मदानाम् । व्यसृज्यतेति विसृष्टाः,विपूर्वात् सृजेर्निष्ठा, जस्य "व्रश्च"—इति षत्वम् । पार्श्वम्-पर्शूनां समूहः, "पर्श्वा णस् वक्तव्यः" इत्यनेन पर्शुशब्दाण्णस् तद्धितः. लक्षणया चायं पार्श्वशब्दः समीपवाची । पाशभृता-पाशं बिभर्तीति पाशोपपदाद् बिभर्तेः क्विप्,"ह्रस्वस्य"—इति तुक् "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्" इत्यनेन तृतीया । विरावः-विपूर्वाद् रौतेर्घञ् । उदीरयामासुः-उत्पूर्वकस्य चौरादि-कस्येरयतेर्लिटि रूपम् । विरावैरालोकशब्दमिति प्रकृत्यादित्वात् तृतीया ।

व्याख्या—विसृष्टाः-निवर्तिताः, पार्श्वानुचराः-समीपवर्तिनः सेवका येन तथाभूतस्य, पाशभृता-वरुणेन, समस्य-तुल्यस्य, तस्य-राज्ञो दिलीपस्य, पार्श्वद्रुमाः पार्श्वयोः वामदक्षिणभागयोः स्थिताः, द्रुमाः-वृक्षाः, उन्मदानाम्-निरतिशयं मत्तानाम्-अतिहर्षाविष्टानाम्, वयसाम्-पक्षिणाम्, विरावैः-शब्दैः, आलोकशब्दम्-'क्षमया आलोकय, जय, जीव,' इत्यादिकं राजोचितं जयशब्दम्, उदीरयामासुः-उच्चारयामासुरिव ।

भावार्थः—यथा वरुणो जलाभिवर्षणेन समस्तं वनस्पतिजातमभिवर्धयति, तथैवायमपि महाराजो दिलीपो रक्षणशिक्षणादिना प्रजाः परिपोषयति । अत एव वरुणदेवतुल्यस्य असहायं वने भ्रमतोऽस्य पार्श्ववर्तिनो वृक्षाः, अस्य दर्शनेन हृष्टानां पक्षिणां कलकूजितैः स्वागतमिव कुर्वन्तो जयशब्दवादिनामनुचराणां कार्य्यं निर्वर्तयामासुरिति सम्भाव्यते ।

अलङ्कारादिः—पक्षिणां स्वाभाविके कूजने स्वागताभिसन्धिकृतजयशब्दत्वसंभावनादुत्प्रेक्षा । पाशभृता समस्येति धर्मलुप्तोपमा । पार्श्वानुचरत्यागेऽपि जयशब्दलाभात् पूर्वरूपं च । उत्प्रेक्षया पूर्वरूपस्याङ्गाङ्गिभावसंङ्करः, उपमया तु संसृष्टिः । पूर्वार्धे पाशब्दस्यासकृदावर्तनाद् वृत्त्यनुप्रासः । राज्ञः प्रभावातिशयव्यञ्जनाद् ध्वनिः ।

१—खगवाल्यादिनोर्वयः—इत्यमरः । २—आलोको जयशब्दः स्यात्-इति विश्वः ।

मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम् ।
अवाकिरन् बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥ २१ ॥

अन्वयः—मरुत्प्रयुक्ताः बाललताः मरुत्सखाभम् आरात् अभिवर्तमानम् अर्च्यम् तं पौरकन्याः आचारलाजैरिव प्रसूनैः अवाकिरन् ।

व्याकरणम्—मरुता प्रयुक्ता मरुत्प्रयुक्ताः, "कर्तृकरणे कृता बहुलम्" इति क्तान्तेन तत्पुरुषः। बाला लताः बाललता इति कर्मधारयः । मरुत्सखाभम्—मरुतः सखा मरुत्सखः, (तत्पु०) स इवाभातीति तम्, निरुपपदादाभातेः "आतश्चोपसर्गे" इति कः, ततः "उपमानानि सामान्यवचनैः" इति समासः । मरुत्सखस्येवाभा यस्येति लाक्षणिकपूर्वपदो बहुव्रीहिर्वा। मरुत्सख इति "राजाहः सखिभ्यष्टच्" इति समासान्तः। आचारलाजैः-आचारार्थाः,आचारस्य वा लाजास्तैः, मध्यमःपदलोपी, षष्ठीतत्पुरुषो वा । पुरे भवाः पौराः, अण्-तद्धितः । तेषां कन्याः पौरकन्याः । अर्चितुं योग्यम् अर्च्यम्, अर्चतेरर्हार्थे ण्यत् । अभिवर्तमानमिति वर्ततेः शानच् । अवाकिरन्-तौदादिकात्किरतेर्लङ् ।

व्याख्या—मरुता-वायुना, प्रयुक्ताः-प्रेरिता आन्दोलिताः, बालाः-नवाः, लताः*, मरुत्सखाभम्-अग्नितुल्यम्-तथा प्रतापशालिनमितियावत्, आरात्†-समीपे, अभिवर्तमानम्-आगच्छन्तम्, अर्च्यम्-पूजनीयम्, तम्-दिलीपम्, पौरकन्याः-पौराणां-नगरवासिनां, कन्याः-सुताः, आचारलाजैरिव-आचारार्थैर्लाजैधान्यैरिव, प्रसूनैः-कुसुमैः, अवाकिरन्-राज्ञ उपरि-पुष्पाणि ववृषुरिति ।

भावार्थः—नगरे हि राज्ञः प्रचारे पौरकन्या गृहेभ्यो लाजान् प्रक्षिपन्ति इत्याचारः । स एष आचारोऽत्र कन्यानामभावेऽपि वायुनान्दोलिताभिर्लताभिर्लाजसदृशपुष्पवर्षणेन संरक्षितः । अग्निः खलु वायोर्मित्रम्, दिलीपश्चाग्निसदृशः, प्रभावेण पूज्यश्च, अत एवेदृशस्य मित्रस्यातिथीभूतस्य स्वागतं कर्तुं वायुना लताः प्रेरिता इति । महापुरुषस्य प्रयाणे शुभसूचकस्य मन्दस्य वायोः प्रचारः प्रकृतिसिद्धः । मित्रसदृशस्य राज्ञ आतिथ्यं हेतुतया निगूढमुत्प्रेक्षितं कविना ।

अलङ्कारादिः—पूर्णोपमा मुख्या। भावार्थे प्रदर्शितया रीत्या गूढोत्प्रेक्षाऽपि । मरुत्प्रयुक्ताः, मरुत्सखाभमिति साभिप्रायविशेषणोपादानात् परिकरस्यो-

*वल्ली तु व्रततिर्लता इत्यमरः । †आराद् दूरसमीपयोः—इत्यमरः ।

त्प्रेक्षया सहैकवाचकानुप्रवेशसंकरः, ताभ्यां च लाटानुप्रासस्य स एव संकरः । प्रभावातिशयस्य ध्वनिः पूर्ववत् ।

धनुर्भृतोऽप्यस्य दयार्द्रभावमाख्यातमन्तःकरणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः ॥ ११ ॥

अन्वयः- विशङ्कैः अन्तःकरणैः दयार्द्रभावम् (इति) आख्यातम् धनुर्भृतः अपि अस्य वपुः विलोकयन्त्यः हरिण्यः अक्ष्णाम् प्रकामविस्तारफलम् आपुः ।

व्याकरणम्—विशङ्कैः-विगता शङ्का येभ्यस्तैः ( बहु० ) शङ्का-शङ्कतेः स्त्रियामप्रत्ययः । दयया आर्द्रो ( तत्पु० ) भावो यस्य ( बहु० ) तद् दयार्द्रभावम् । धनुर्भृतः-धनुर्बिभर्तीति तस्य, 'क्विप्' तुक् च । प्रकामविस्तार-फलम्-प्रकामं विस्तारः "सुपा" इति समासः, तस्य फलम् ( ष०त० ) आख्यातम्-आङ्पूर्वाच्चक्षिङो धातोः क्तः, "चक्षिङः ख्याञ्" इति ख्यादेशः । गौणक्रियेयम्, अन्तःकरणैरित्यस्याः कर्तृपदम्, दयार्द्रभावमित्यस्याः कर्म । विलोकयन्त्यः—चौरादिकाल्लोकयतेः शतृप्रत्ययः, उगित्त्वान्ङीप् । विस्तारः-"प्रथने वावशब्दे" इति स्तृणातेर्घञ् । वपुरिति विलोकनक्रियाकर्म ।

व्याख्या—विशङ्कैः-भयरहितैः, अन्तःकरणैः-चित्तैः, दयार्द्रभावम्-दयया-कृपया, आर्द्रः—स्निग्धः-अकलुषितः, *भावः-आन्तरोऽभिप्रायो यस्य, तथाभूतम्, आख्यातम्-कथितम्, 'एतद् न हिंसाशीलम्' इत्येवं बोधितमिति यावत्, धनुर्भृतः-धनुर्धारिणः, अपि, अस्य दिलीपस्य, वपुः-शरीरम्, विलोकयन्त्यः-विशेषेण पश्यन्त्यः, हरिण्यः-मृग्यः, †अक्ष्णाम्—नेत्राणाम् प्रकामविस्तारस्य-निरतिशयप्रसारस्य, फलम्, आपुः-लेभिरे ।

भावार्थः—यद्यपि कार्मुकधारिणो दिलीपाद् बाह्यदृष्ट्या भयं संभावितम्, तथापि हरिणीनां मनसि तं दृष्ट्वा भयं न जातमिति-'विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं च' इति न्यायेन 'दयाशीलोऽयं राजा नास्मान् हिंस्यात्' इति हरिण्यो विश्वस्ताः । तत एव च निर्भीका अतिशयेन मनोहारि शरीरमस्यालोक्यालोक्य स्वनेत्राणां विस्तारस्य साफल्यममन्यन्त ।

*—भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु-इत्यमरः ।
† लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी इत्यमरः ।

